Shri Raghunath Temple MSS. Library,
JAMMU

No. ४४१५

Title देव पद्धति प्रातिष्ठ्यादि

Author ×भट्ट नील कण्ठः×

Extent १० Age ×

Subject देव पद्धति.

श्रीगणेशायनमः॥४॥अथातिथ्येष्टिःतत्रवैष्णवनवकपालःपुरोडाशोभवति॥अत्रानित्वरयापदार्थाः
कार्याः।चतुरासनंब्रह्मोपवेशनंप्रणीताप्रणयनं।आहवनीयस्यैवपरिस्तरणं।पात्रासादने।शूर्पाग्नि
होत्रहवणी।स्फ्यंकपालानिनवाशम्याकृष्णाजिनं।उलूखलमुसलं।दृषदुपलं।पात्रीधान्यं।पवित्र
च्छेदनानिपवित्रेधृष्टिःसंयवनोदकं।मदंतीपात्रद्वयंमृन्मयं।एकंयजमानस्य।अपरंपत्न्याः।स्थाली
आज्यंचावेदश्च।उदककुम्भमग्निः।एकोनविंशतिरिध्मकाष्ठानि।काश्मर्यमयाःपरिधयः।आश्व
वालःप्रस्तरऐक्षव्यौविधृतीबर्हिश्चेतिबर्हिश्चतुर्थी।स्रुवोजुहूः।उपभृतध्रुवाप्राशित्रहरणेअ
तावदानं।पात्रीपद्‌द्वेयोक्त्रं।पूतकुशाः।मंथनचतुष्टयं।पीठंकुशास्तीर्णं।इडापात्रीषडवत्तं।व्रतपा
त्रंहिरण्यं।द्वेसमिधौ।सुब्रह्मा।सुब्रह्मण्याअर्घपात्रंचाततस्फ्यापहितपात्रीकरणादिप्रदक्षिणं।पत्न्य
धर्याःस्वारंभंकरोतितत्रविशेषः।पंचकृत्वोपग्रहणं।देवस्यसवितुःप्र॰भ्यां।अग्नेस्तनूरसिविष्णु
वेत्वाजुष्टंगृह्णामि।अत्रप्राकृतमंत्रेत्वाशब्दस्यनिवृत्तिः।एवंप्रथमग्रहणं।देवस्यत्वासवितुःप्र॰
भ्यांसोमस्यतनूरसिविष्णवेत्वाजुष्टंगृह्णामीतिद्वितीयं।ततःश्येनायत्वासोमभृतेविष्णवेत्वे
तिचतुर्थी।अग्नयेत्वारायस्पोषदेविष्णवेत्वेतिपंचमं।चतुर्थपंचमौग्रहणायोदेवस्यत्वेतिमंत्रस्य

८ देव° जुष्टं गृह्णामीत्यस्याभावः। नमो भूताय त्वेति शेषाभिमर्शनादि। अत्र यवशालासमीपे शाकटं स्थापयि-
३३ त्वा एकस्मिन्बलीवर्दे विमुक्ते अपरस्मिन्नविमुक्ते एवाध्वर्युः स्थालीं प्रविश्य पाशीघ्रं चतुरासनादि
हविर्ग्रहणं सादनान्तं कृत्वा हविष्कृतावाचं विसृज्य वोत्तरमनड्वाहं विमुच्यासंघाहरणाभिमर्शनाः
दि प्रपादनान्तं कुर्यात्। ततः पवित्रच्छेदनादि अंडनादि वा कर्त्तव्यं। उभयपयथाशास्त्रान्तरे दर्शनात्। प्रो
क्षणो विष्णवे त्वा जुष्टमिति। नवकपालेषु चतुर्थकपालोपधानान्तरमवशिष्टानि पंच विभज्य त्रीं। नं५
णि दक्षिणतः। द्वे उत्तरतः। उपसर्जन्यधिश्रयणानन्तरं अध्वर्युर्यजमानमदन्तीं गार्हपत्ये अधिश्रय
ति पत्नीमदन्तीश्च दक्षिणाग्नावधिश्रयति मदन्ती शाद्देनकुलर्थः आप उच्यंते। अत्र आरभ्य मु
ष्टिविसर्गपर्यन्तं यत्किंचिदुदककार्यं प्रणीताप्रणयनप्रोक्षणोदकाचमनस्पर्शनाचमनादिकं पुरुष
र्थं च नैमित्तिकस्नानशौचाचमनपात्रादिकं तत्सर्वमदन्त्युदकेनैव कार्यं। आज्यग्रहणेति मृष्ट
पि स्नुक्स्रुचनु गृहीतान्येव गृह्यंते। आहवनीयकल्पनानन्तरं मुल्मुकोद्धहनाभावः। प्राणद श्रीराम
नेविल्लुं गच्छ। हवींष्यासाद्यालंभात्मालंभोदकालंभो। शाकल्लादानादि होमोत्तरमग्निमंथनं वे १
ष्वेदेव पर्ववत्। ततो होतृषदनकरणादिनानुयाजसमित्परिशोषणं। सप्तदशेन वज्रेणेत्य

वबाधुनां इदमग्नये सोमाय विष्णवे देवेभ्य इत्यादि। उत्तमप्रयाज त्यागे। ततः आज्यभागौ। ततो वै
ष्णवो वैष्णवो यागः। विष्णवे अनुब्रूहि विष्णुं यज। अत्रापि मंत्रमातिथ्यायामितिपक्षे देवतापदमा
त्रमुपांशु प्रागग्नीषोमीयात् उपांशु पक्षे सर्वमुपांशु भवति। ततः स्विष्टकृदादि प्राशित्रादि सर्वमपि
वित्रप्रतिपत्त्यं ते यजमान ब्रूतपात्रं वेदौ निधाय तस्मिन् ब्रह्मादिक्रमेण सर्वे ऋत्विजः आपतये त्वे
ति मंत्रेण सकृद्ध्रौवमाज्यं स्वल्पं स्वल्पं गृहीत्वा पुनस्तानल्पाः सकाशात् द्विर्द्विः स्रुवेण तूष्णीं गृ
ह्णंति। ततो यजमानोप्येवमेव गृह्णाति। ततस्तद्धूतपात्रमाज्यसहितं दक्षिणस्यां वेदिश्रोण्यां निधा
य सर्व ऋत्विजो यजमानसहिताः महेवृसहिरण्यं तद्धूतमाज्यं नुस्तो माज्यं समवमृशंत्यनाधृष्टमसी
ति मंत्रेण। ततो यैः सह तानूनप्त्रमाज्यं समृष्टं तेभ्यः कदाचिदपि द्रोहो पकारो न पात्रेणापिधाय
सुगुप्ते देशे निदधाति। ततो यजमानो ग्रव्रतयाइ त्याहवनीये समिधमाधाय मदंती रुपस्पृ
श्य गाढतरं मुष्टिमेवं कुरुते। पत्नी च गार्हपत्ये तूष्णीं समिधमाधाय स्वमदंती रुपस्पृश्य
गाढतरं मुष्टिमेवलं कुरुते। ततो ब्रह्मा ज्ञानहोतृ ध्वर्यु अग्नीषोमीश्री धाय यजमान पत्न्यं नामिकाया
हिरण्यं बध्वा उपस्पृश्य मदंती रुपस्पृश्याहवनीयं पूर्वेण गत्वा अंशुरंशुष्ट इति सोमसमाप्यायय

८ देव०
३४

तिविस्तृतं स्यालंभनइत्यर्थः। ततः प्रत्यागत्यैष्टारायइति मंत्रेणोत्तानाहस्ताद्दक्षिणोत्तानावा प्रस्तरे प्राणी
नि दधति ब्रह्मादिक्रमेण ब्रह्मयजमानौ दक्षिणतः स्थिताववेव सोमालंभमनिह्नवौ न कुरुतः। किंतु यथास्वमंतरमाह
वनीयं पूर्वेणापरीत्य सोमाप्यायनं कृत्वा तथैव प्रत्याहृत्य प्रस्तरे निह्नवं कृत्वा ततोयथागतं गत्वा स्वस्थाने उ
पविशतः। ब्रह्मयजमानभागयोः परिहरणं। अग्निसंमार्गप्रैषः। अग्निसंमार्गः। व्यूहनं विस्लाकजितिर्विष्णुस्
मपनुदस्विति। जुहूमन्युपभृत्यपरिध्यंजनं। इहवातानूनप्त्रादिनिनिह्नवानं। अस्सूक्तवाकप्रैषः। प्रस्तरहोम
भावीतो क्रकक्रमे। तनुभवति। ततः संजानाथामितिप्रस्तरादानं। व्यंतुवयइत्यंजनं। ततः परिधीनां
विधृत्योश्चादीनां। ततोग्नीन्मदं त्वापाइत्यग्नीधं प्रतिप्रैषः। मदंतीति प्रत्याहाग्नीनु। ततामकृतामितीति
नीचैर्हरणं। ततस्ताभिरेहीति ब्रह्मणेपरिधिविधृतिसहितं प्रस्तरमाहवनीयस्यापरिष्टात्समीपे
नैवातिहृत्याग्नीध्रेण हृताभिर्मदंतीतिभिरभ्युक्ष्याग्नीधे प्रस्तरं परिधिविधृतिसहितं निधानायरणा
र्थं समर्पयतीति। ततब्ब्रूह्युपाइत्यासानमालभते। ततउदकोपस्पर्शनं। संस्रवाहुतिः। धुरिनि
धानं। वेद्यालंभोत्र न भवति। समिष्टयजुर्होमयोरभावात्। चेदविमोकः। पत्नीयोक्रस्य वा बर्हिर्विदोप्स्थ श्रीराम
नेमेव निष्ठति। प्रणीताविमोकः। राज्ञः सभागः। भागावेक्षणं। भागप्राशनमिति। ततः सुब्रह्मण्योपासे २

ब्रह्मण्यपामाह्वयेति। सुब्रह्मण्यां श्रांतः। पात्यस्यपुरस्ताद्वेदिमध्येप्रां ङ्मि्ष्ठस्सुब्रह्मण्यां ह्वानं करोति। प
त्नीयजमानौ च सुब्रह्मण्यमन्वारभेते॥ ॥ इत्यातिथ्येष्टिः॥ अथ प्रवर्ग्यप्रवरणां प्रथमयज्ञे प्रवर्ग्योनिभवति
। श्रोत्रियविकल्पेनभवति। तेन सोत्रलिख्यते। तत्र पूर्वत्रयासां शालाद्वाराणां माधानं। पत्न्यापवर्ग्यस्यदर्शन
नकर्त्तव्यमवेदिक्रैः सूक्तादिभिश्चा। अत्रयावदुक्तं तावदेवभवति। नान्यत्प्रकृतितः किंचित्। ततो ब्रह्मयजमान
होत्रध्वर्युप्रतिप्रस्थातृप्रस्तोत्राग्नीध्राः स्वं स्वं वाचमित्यधार्यं शां त्यर्थं पठंति। दक्षिणासनं। ब्रह्मणोदक्षिणाग्नि
मपरेणावोपवेशनं। आहवनीयं दक्षिणेनवा। आहवनीयस्यपरिस्तरणं किंचित्। कुर्वंति। ततो गार्हपत्य
स्यपुरस्तात्प्रागग्रानुदकस्थानू बहुकुशानास्तीर्यतेषु कुशेषु दक्षिणतः आरभ्योदक्संस्थानिध
र्मपात्राणि द्वंद्वमासादयति। तथाहि उपयमनीमहावीरं परिशासौ पिन्वते रौहिणकपालेरौहि
णहवन्यौ स्रुवौ नुन्काणी स्थूणामयुर्षं धृष्टी शतमानौ मुंजप्रलवान् विकंकतशकलान्विंशति
तिंप्रादेशमात्रान्। स्रुवं मुंजवेदं। पवित्राणि परिधीश्च रज्जुसंदानमासंदीं। कृष्णाजिनमिति
मितनाः खराधीत्रिषुमहस्सु पारावेषु प्रथमासादनं। अर्थवज्ञा अधिहोत्रहवणीवज्रः। पवित्र
छेदनानिपवित्रे। आज्यस्थालीबर्ह्याज्यं। शूर्पं पात्रीं पिष्टं संयवनोदकं। होतृषदनं मौंजः कूर्चः

८ देव० औदुंम्बरिसमिता। कृत्वाजिनंदूतैरा महावीरेऽवाञ्चम्युपशायनेवौ एतान्युपमन्यादीनि पात्राण्यौदुं
२५ बराणि भवंति। यत्किंचिदूर्ज्जाजानं तन्मुञ्जयं त्रिगुणं च भवति। ततोऽध्वर्योः पवित्रे स्थ इति पवित्रे द्वे
दनं। ततोऽग्निहोत्रहवण्यां मदंतीः कृत्वा सवितुर्व इत्युत्पवनं। सव्यहस्ते कृत्वा दक्षिणेनादिगने
स्ता देवीराप इति प्रोक्षितास्थेति तासां प्रोक्षणं। एवं प्रोक्षणीसंस्कृत्योध्वर्म्योत्थाय ब्रह्मन्प्रचरिष्याम
इति ब्रह्माणं प्रत्याह। होतरभिष्टुहीति होतारं। प्रस्तोतः सामानि गायेति प्रस्तोतारं। ततो ब्रह्मणा प्र
चरतेत्यनुज्ञातोऽध्वर्युःकपविश्यैकमेव महावीरं यं मायत्वा। प्रोक्षामि मखाय त्वा प्रोक्षामि। सूर्य
3 स्यत्वा तपसे प्रोक्षामीति। एवं त्रिः प्रोक्षितो भवति। तूष्णीं परिधर्म्यस्य सादितपात्रजातस्य प्रोक्षणं
पात्रप्रोक्षणीनंतरमेव प्रतिप्रस्थातास्थूणामयूषं शालायोः पूर्वद्वारेण निःक्रम्यशालाया दक्षिणतस्त
निखनति। यत्र निखातं स्थूणामयूषं गार्हपत्यसंनिधावुपविष्टो होतायपश्यति। दक्षिणतःस्थूणं
गोर्बंधनार्थं निखनति। स्थूणायाऽत्तरतो जावंधनार्थं मियूषं निखनति। ततः शालायामागत्य
गार्हपत्यस्योत्तरतो रत्निमात्रे एकं स्वरं निवपति। तत्र पंचमृत्संस्कारान्कृत्वा एकं शरावस्थाः सि
कता निवपति। ततआहवनीयस्योत्तरतो द्वितीयं स्वरं निवपति। तत्रोल्लिखत्याप्युत्त्येति कृत्वा द्वि श्रीराम
तीयशरावस्थाः सिकता निवपति। तत आहवनीयस्य दक्षिणतो मिमितमत्रिधौ तृतीयमुल्लिख्य २

वरमेव संस्कारद्वयं कृत्वा तृतीयशरावस्थाः सिकता निवपति ॥ ततः आहवनीयं पूर्वेण धर्मासंदीं पर्याहृत्य आहवनी-
यस्योमार्जाल्यस्य चांतराल इत्यर्थः ॥ सा चासंदी स्कंधमात्र्या री र्ध पादा ॥ अरत्निमात्राणि शी ॥ बाल्वजरज्ज्वा व्यूता भवति
ततस्तस्यामासंद्यां कृष्णाजिनमास्तीर्य तस्मिन् कृष्णाजिने अग्निमुपधायामितरौ महावीरौ च निदधाति ॥ एतत्स-
र्वं वस्त्रादिना अवच्छादयेत् वा ॥ न वा ॥ अध्वर्युः पात्रप्रोक्षणानंतरमेव पूर्णाहुतिवदाज्यं संस्कृत्य होत्रा अंजं-
तीत्युच्यमाने स्रुवेणोपमादाय स्वस्ति इति महावीरं अनक्ति ॥ ततो रजतशतमानं गार्हपत्यस्योत्तरतो न्युप्ते खरे
पृथिव्याः सं स्पृशस्वाहीत्येव गृह्णाति ॥ सिकतानाम् मध्ये धः प्रवेशयनीत्यर्थः ॥ रुक्मिकाशतेन शतमानो इ-
ति षड्विंशाध्यायस्य द्वितीया कंडिका ॥ ३ ॥ ततः स्तुकं गायेति प्रस्तोतारं प्रेष्यति ॥ पत्नी शिरः प्रोर्णुते ॥ उत्स्नीषेण
श्निसहितं वेष्टयति ॥ ततो होत्रा सं सीदस्वेति पठ्यमाने अध्वर्युर्मुंजप्रलवान् दीप्तेन नादीप्य प्रतिदिशं खरे क-
रोति ॥ ततः आज्यं संस्कृतं महावीरे निनीय ततो विरसी इति मंत्रेण तेषु तमाज्यपूर्णं महावीरं निदधाति ॥ त-
तो महावीरस्योपरि समीप्रादेशं धारयं तं यजमानमनाधृष्टेति वाचयति ॥ अथ वा पुरस्तादारभ्य प्रतिदिशं
धारयंत्तं यथालिंगं मनाधृष्टा इत्यादि पंच मंत्रान्वाचयति ॥ ततो विश्वाभ्य इति मंत्रेण महावीरं दक्षिणेन भू-
मावुत्तानं पाणिं यजमानो निदधाति ॥ ततो यजमान एव महावीरस्योत्तरतो भूमौ प्रादेशं निदधाति मनोर-
श्वासीति ॥ ततो ध्वर्युः महावीरं धृष्टिभ्यां भस्मना परिकीर्य धृष्टिभ्यामेव गार्हपत्यांगारैश्च परिकिर

८ देव० ३६

णंकरोति। ततस्त्रयोदशभिर्विकंकतशकलैर्महावीरं परिवेष्टयंति। तत्र प्रथमं द्वौ शकलौ प्रागग्रौ परितो
विक्षिप्यमाणमंगारेणानुपरि निदधाति। एकं महावीरस्य दक्षिणतः द्वितीयमुत्तरतः स्वाहा मरुद्भिः परि
श्रीयस्वेति मंत्रेण सहैव द्वौ निदधाति। तत एकादश तूष्णीं तत्र द्वावुदगग्रौ। एकं महावीरस्य पुरस्तात्। अन्य
परं पश्चात्। ततो द्वौ प्रागग्रौ पूर्ववत्। ततो द्वावुदगग्रौ। पुनर्द्वौ प्रागग्रौ। एवं द्वादश। त्रयोदशं दक्षिणतः प्राग
ग्रं। ततः सुषम्पृक्तमानेन महावीरमपिदधाति दिवः स० स्पृशा इति मंत्रेण रक्तिका शतेन शातम
नं॥ ॥इतिषष्ठविशेषोप्रवर्ग्याध्याये तृतीयाकंडिका॥ ॥ततश्चंद्रं गायेति प्रैषः। ततः कृष्णाजिनखंडैर्दंड
युक्तैर्व्यजनाकारैस्त्रिभिः परिकीर्णानंगारान् शकलान् सिंधुक्षितानुपवाजयति मधुमधुमध्विति मंत्रेण
ततउपवाजनानंतरं त्रयाणां मध्ये एकं पवित्रं प्रतिप्रस्थात्रे समर्पयति। द्वितीयमग्नीधे। तृतीयं स्वहस्त
एव धारयति। ततश्चंद्रमसा समाप्तो होतरोगवशान्युवं सिमस्यन्नवैगागायेति प्रैषः। ततोध्वर्युप्रतिप्रस्था
त्राग्नीध्राः अंगारान् पवित्रैर्धून्वंतो वाजयंतस्त्रिः प्रदक्षिणं परियंति। ततः उपस्पृश्य पवित्राण्य
भ्यंतरे कुर्वंति। स्वयं च पूर्वपूर्वापिप्रज्ञया बर्हिः क्षिपंति। ततः पुनरप्यंगारान्वाजयंतः प्रदक्षिणं त्रिः परि
यंति। नात्रापसव्यकरणं अविहितत्वात्। अप्रदक्षिणपरिगमनमात्रस्याश्रुतत्वात्। अन्यथाप

श्रीराम

सत्वविनिर्धूर्न्नितीति अथोत्तरं देवत्परिक्रमणं कचितोधर्मइत्यतः परं कार्यं। ततोऽन्वारलायां महावीरं प्राप्तायां सुवर्णं
शतमानं कचिन्निधाय सुप्तेरेशेस्थापयित्वा स्रुवेणाज्येन महावीरं प्रतिप्रणवं परिषिंचेत्। होत्रा पच्यमानस्य
सूक्तस्य प्रणवे प्रणवे इत्यर्थः। ततः प्रतिप्रस्थाता रोहिणौ करोति। तत्रस्थाया पहितपात्री करणं पात्रांतरे प्रोक्ष
णीरुत्नी यश्रूर्पाग्निहोत्रहवण्या शरानां प्रतपनं। बिलालंभः पिष्टेक्षणं। अपहृत्या निरसनं। तद्भावे हविषाभि
मर्शनमेवा पुनः पिष्टानामालंभनं। चतुर्मुष्टिकद्वयस्य ग्रहणं। शेषाभिमर्शनं। प्राङ्नीक्षणं। उत्थानं। अन्तरतो
गमनं। पूत्रपरानस्य पश्चाद्रासादनं। प्रोक्षणीः स्कृ विकृत्वा ब्रह्माणं समीक्ष्य रोहिण्योः प्रोक्षणी पत्न्या
मावपनं। ततउपवेषमादायांगाराणां प्राचः कारणं। प्रथमकपालं धर्मेण दक्षिणोत्तरयो रोहिणकपाल
योरुपधानं। अभ्यूहनं। उपसर्जन्यधिश्रयणं। ततः पिष्टानामीक्षणं। सपवित्रायां पात्र्यां संवापः। उ
पसर्जनीरुक्लस्य निनयनं। पवित्राभ्यां प्रतिग्रहणं। संयवनं। विभज्यालंभनं। अधिश्रयणं। प्रथनीं अ
ङ्गिरभिमर्षनं। एवं द्वितीयस्य पात्र्यंगुलीप्रक्षाल्यनं। पर्यग्निकरणं। श्रपणं। आलंभः। अभिवासनं। अ
भितप्यपात्र्यंगुलिप्रक्षाल्लनं। पर्यग्निकरणं। श्रपणं। आलंभः। अभिवासनं। अभितप्य पात्र्यंगुलिप्र
क्षाल्लनं। निनयनं। यजमानस्यत्यागः। ततइडा द्यावापृथिवी पूर्ववित्तय इत्यस्मिन्मंत्रे होत्रा पठ्यमाने प्रतिप्रति
प्रस्थाता आहवनीयं परितः औदुंबरान्परिधीन्परिदधाति। मध्यमदक्षिणोत्तरान्तूष्णीमेव। ततः

८ देव॰ ३९

वाज्पारुवस्नारः तत्रस्थाभिघारः। उद्वासनं। प्राणोद्वानं। कपालयोरंजनं। उद्वासनांतं तत्र स्थाये रौहिणहव
न्यावादायाहवनीयाद्दक्षिणोत्तरावासादयति। एवमेव प्रतिप्रस्थाता तूष्णीं कर्म। ततो होता मन्त्रवर्णीमश्विने त्वं ध्यामाने
अध्वर्युकृपा तिष्ठन्तु कवितो धर्मं इत्याहा प्राकृतं वेदुत्तर देवं वत्पारक्रमणं न ह्यात्र कर्त्तव्यं। ततो यजमान माहि
ताः षड्त्विजो गर्भो देवानामित्यादि नमस्ते अस्तु मा मा हिंसीः हिरित्यं तेन मोद्वेन कंडिका षट्केन घर्ममुपतिष्ठंति
षडुपतिष्ठंते॥ इति पानपयो॥ प्रस्तोतुरनुकृत्वान् षड्ढ होणं यजमानाः। सर्वर्त्विजः उपतिष्ठंते इत्युवमप
के। ततोऽध्वर्युः पत्न्याः शिरस उद्घाटनं करोति। ततः पत्नी महावीरं इंद्राणी त्वष्टमंत्रेत्यमुमंत्रं वाचय
ति। ततः साम्नो निधने प्रस्तोत्रा गायमाने अहः केतुना समं [illegible] दक्षिणे रौहिणमाहवनीये जुहोति। इद
मू हरि नित्यागः। इदं धर्माय येति वा। अहः केतुना यजुषी घर्म देवत्वे इत्युक्तत्वात्॥ ६॥ इति षष्ठी प्रव
र्ग्याध्याये चतुर्थी कंडिका॥ ॥ ततोऽध्वर्युर्देवस्य त्वेति मंत्रेण रज्जुसंदानं गृह्णाति। ततः पिन्वनमादत्ते
प्रतिप्रस्थाता पि तु शीर रज्जुसंदानं वादत्ते। ततोऽध्वर्युस्वपरेण गार्हपत्यं दोहनार्थं गच्छन् सूर उएहि। आदित
एहि। मरस्वत्येहि इति गामाह्वयत्यध्वर्युः ततो मुंकी एहीत्येवं गोर्वा व्यावहारिकनाम्ना त्रिकृत्वेराह्वयति॥
प्रतिप्रस्थाता अप्यध्वर्युमनुगच्छति। ततो धेनुगायेति प्रैषः। ततो दक्षिणेन द्वारेण निष्क्रम्य गाः समीपे
गत्वादित्यै रास्नेति गां पाशेन प्रतिमुच्य ततः स्थूणां यावपानि। ततः पूषासीति वत्समुत्सृजति। ततो गाः
अपरपादे स्पंदानेन वध्वा घर्माय दीष्वेति वत्सं स्तन्यं पिवंतमपनयति। ततो अश्विभ्यां पिन्वस्वेति पिन्व

5

श्रीराम
५

नेइत स्ततः पत्निताम्विशद्गृहनमभिमंत्रयते। ततोयक्ष्मसूनइति स्तमात्तभते। एवमेव प्रतिप्रस्थाता अजां मयूखे बध्वा नूत्मीं
दोग्धि। ततोऽजां पाशेन प्रतिमुच्य स्त्रूणायां बध्वा बर्करमुत्सृज्य संदाय बर्करमुन्नीयपिन्वने यावदर्थं दोहयित्वाक्षे
नावालभते केचिदजायाबर्करं संदानं चनेच्छंति। तदयुक्तं। एवंशाद्वेन सर्वस्यातिदेशात्। शाखान्तरे बर्करस्य मा
दोत्कृतत्वाच्च। ततः पयोगायेति प्रैषः। ततः उत्तिष्ठ ब्रह्मणस्पत इति होत्राच्यऽमाने गोः समीपादुत्तिष्ठति। ततः
उपद्रव पयसे होत्राच्यमाने उर्वंतरिक्षमिति गोः समीपाच्छालायां प्रतितिगच्छति। आपस्तंबः। यदिघर्मदुग्दोहकाले
नागच्छेदन्यां दुग्ध्वा प्रवृंज्यात् तां मुत्पार्ये ब्राह्मणाय दद्याद्यमन भागमिष्यत्स्यादिति। ततो यथागतं प्रत्यागत्य दुग्धं
कविन्वगुप्ने निधाय कस्यचिद्भक्तेयां समर्प्य वा। ध्वर्युः गायत्रं छंदोसीति प्रतिमंत्रं परिशासौ संदशाकारौ चाद
त्ते। ततोवत्सिष्ठ शाक्यो गायेति प्रैषः। ततस्ताभ्यां संदंशाभ्यां मदिग्धाभ्यां द्यावापृथिवीभ्यां त्वेति महावीरं परिगृह्णा
ति। ततो महावीरं परिशासाभ्यां उद्धमुत्पाटयतीत्यध्वर्युः। विरोधात्प्रतिप्रस्थाता मुञ्जवेदेनाधस्तादुपसृ
ज्यतललग्नं सिकतामस्मादिकं पातयित्वेपपमन्वाधस्तादुपगृह्णाति। अन्यं नाविद्धेरणेति। ततः शालादाह
भयादपरेण द्वारेण शाखाबहिभिः मृत्पदूरे गत्वा कस्मिंश्चिद्विपुले संमे पात्रे महावीरं निधाय परितो ल
घुपाषाणैरवष्टभ्राति। ततो जायया साम महावीरमवसिच्य प्रांते जातें दूं द्राश्विनेति गोः पयोमध्योनिऽ

८ देव० नयति। ततो घर्मागतं शालायां गार्हपत्यस्वरस्योपरि महावीरं धारयित्वा प्रैतु ब्रह्मणस्पतिहोत्रा पठ्यमानेध्व
३८ र्युराहवनीयं प्रति घर्महस्त एव गच्छन् समुद्रायेति वातनामानि स्वरेण जपति पितृमते स्वाहेत्यं नानि॥ ॥इति
षड्विंशे प्रवर्ग्याध्याये पंचमी कण्डिका॥ ॥ततः स्वाहा घर्मायेत्यनेनोपयमन्यास्रुवा घर्ममध्ये घृतमासिंचति यदज्ञाय
यो वसे वा काले घर्माग्निः स्पृश्य बहिः पात्रे पतितं भवति। ततः स्वाहा घर्मः पित्र इति जपति। ततोतिक्रम्याश्राव्य घर्म
स्य यजेति होतारं प्रत्याह। ततो विश्वा आशा इति मंत्रेण वषट्कृते जुहोति। इदमश्विभ्यां। ततो दिवि विधा इति मंत्रेण ध
मं त्रिरूर्ध्वं कंपयंति। सकृन्मंत्रेण द्विस्तूष्णीं। ततोनुवषट्कारे कृते स्वाहाग्नय इति पुनर्जुहोति। इदमग्नये। ततो ब्रह्मा अ
श्विना घर्ममिति हुतशेषं घर्मपात्रस्थमभिमंत्रयते। अप्यानामित्यनेन यजमानोपि पात्रस्थमेवाभिमंत्रयते। ततो
ध्वर्युः पिन्वमानं इतस्ततः पात्रमध्ये उत्कूलनं। घर्ममिषेपिन्वस्वेत्यभिमंत्रयते। तं धर्मासि सुधर्मेत्युत्तरपूर्व नो८
र्ध्वं प्रत्युत्क्रामति। ततो मे न्यस्मि इति धर्ममाहवनीयोत्तरे खरे निदधाति। ततो घर्ममध्ये शाकलानि न्यज्य न्य
ज्यं नितरां मत्वा अग्न्यक्तानि विकै कृत शाकले घर्मस्थमाहवनीये जुहोति। स्वाहा पूष्णे शरस इति प्रतिमंत्रं हु
त्वा हुत्वा प्रति होमं शाकलं प्रथमं परिधौ निदधाति। इदं पूष्णे शरसे। इति ग्रावभ्य इति द्वितीये। इति प्रतिरव
भ्य इति तृतीये। चतुर्थं शाकलं धर्मे अक्त्वा अहमस्मैवो दीवी दिक्षामीन्द्रमाणापसव्यं कृत्वा दक्षिणप्रदेशे वे श्रीराम
दिमध्ये बर्हिष्षुपगूहति। इदं पितृभ्य ऊर्ध्वबर्हिभ्यो घर्मपावभ्य इत्यपसव्येन त्यागः। ततोऽपामुपस्पर्श ६

थि

नमुभयोः इदं द्यावापृथिवीभ्यामिति पंचमो इदं विश्वेभ्यो देवेभ्य इति षष्ठे । अत्र मंशकलं सर्वलिप्तांकं दक्षिणेन स्रमाणा उत्तरेते
वस्थिताय प्रतिप्रस्थात्रे समर्पयति । इदं रुद्राय रुद्रहूतय इति त्यागः । ततो यां स्पर्शनिं ततः प्रतिप्रस्थाता तमध्वर्युणा सम
र्पितं पाकलं शालापा उत्तरत उदग्रं निरस्यति । ततः स्वाहा संज्योतिषेति मंत्रेणोपयमन्यां घर्ममासिंचति । ततः समाप्ते निध
नेप्रस्तोत्रा यमानेध्वर्युः । केतुनेति मंत्रेणोत्तरं शोहिणं जुहोति । इदं घर्मायेत्येव त्यागः । ततः परिधौ स्थापितानि पंचशा
कलान्याहवनीये प्रक्षिपति । तत उपयमनीस्थाघर्मस्याग्निहोत्रवृता होमं करोति । तत्र कूर्चे निधानं । समिदाधानं । प्र
दीप्तायां पूर्वाहुतिहोमः समंत्रकः इदं सूर्याय । कूर्चे निधानं न गार्हपत्यावेक्षणं । पूर्वाहुते रुत्तरेतो द्वितीयाहुतेर्होमः तूष्णीं
इदं प्रजापतये । द्विः प्र — घ्य कूर्चे निधानं । उपमार्जनं च । समंत्रकः पूर्वाहुति होम इति सूत्रेषु । तत्ता वाजिनवद्भु
हव पूर्वं ग्निहोत्र ध्वर्युः ब्रह्मप्रस्तोतृप्रतिप्रस्थात्रमथो यजमानानां क्रमेण मधुहुतमित्यनेन मंत्रेणोच्चक्षणो यजमा
नस्य मंत्रपश्चात्ताचा भक्षणं । तत उपयमनीमुपयमनीमुच्छिष्टखरे प्रक्षाल्य निदधाति । अथवा परिधौ निहितानां श
कलानामस्मिन्काले आहवनीये प्रहरणं । ततः स ० माद्यमानायानुब्रूहीति वा । ततोऽत्र सूयवसाद्भगवती स्वमाने
केषिद्धेनवे तृणोदके प्रयच्छति । ततः सर्वं घर्मपात्रजातमासंघाकरोति । मत्रोभिममिति महावीरस्यासंद्यां निधानेमं
त्रः । इतराणि पात्राणि सर्वाणि तूष्णीमासंद्यानिदधाति । ततः सर्वेषां मूर्ध्नि वामं मिति शांतिकरणं । द्वाराणां मुद्घाटनं । ७ ।
आपस्तंबः ॥ यत्र कुत्र प्रक्तानेप्रवर्ग्ये आदित्येभ्यस्तामि यात्रनामांदितिं दवविरमेच्छो भूतेशेषं समानुपादितिः । तथा य
दि घर्मेण प्रचरन्त्यादित्या स्त्रमिश्राद परस्यां द्वारि दर्भणाहितार्पं प्रवध्यो दयं नमस्सस्परीत्युपस्थायो दुस्तं वित्रमिति
निदाभ्यां गार्हपत्ये हुत्वा प्रवृत्या ७ भूतेवयः सुखणीइत्यादित्यमुपतिष्ठत इति ॥ ॥ इति षड्विंशस्य प्रश्नस्य ध्यायस्य

८ देव० २९ षष्ठीकंडिका॥ ॥अथोपवसथविधिः॥ ॥तत्रानुरागमनं ब्रह्मोपवेशनं प्रणीताप्रणयनं आहवनीयस्यैव परिस्तर-
णं पात्रासादनं अग्निहोत्रहवणी वज्रः शम्या दृषदुपले पवित्रच्छेदनानि पवित्रे स्थाली आज्यं वा वेदश्च वेदिस्तृ-
णं एकादशेध्मकाष्ठानि एकवृत्स्तरणपर्याप्तं बर्हिः स्रुवो जुहूः उपभृत् योक्त्रं पुनः कुशाश्च आतिथ्या प्रस्तरविधृ-
ती परिधयः कुशास्तीर्णं पीठं ततः पवित्रच्छेदनं प्रोक्षणीसंस्कारः पात्रप्रोक्षणं असंचरे प्रोक्षणीनां निधानं कुक्कु-
टाहननं आज्यनिर्वापो वेदवंधः अग्नीध एव आज्याधिश्रयणं अध्वर्योः पर्यग्निकरणं ततो वेदीसमीपे गत्वाग्नि-
णा वज्रादानं सव्यं कृत्वा दक्षिणेनालभज्जपः स्फ्यायमेव वेयातृणानधानं स्तंबयजुर्हरणं हरेश्छेषेण स्तृतस्यानिष्ठ्या वर्हि-
षा वंऽप्रोक्ति द्वप्रक्ति द्युत्केरवहरति पूर्वपरिग्रहः उत्तरपरिग्रहः अग्नीधः प्रोक्षणीद्धारणं अध्वर्योः स्फ्यमुद्यम्य
प्रोक्षणीप्रैषः स्रुवेण संमृष्टीति विशेषः प्रोक्षणीभिः स्तीर्णा सारयेति प्रैषः न स्फ्योदग्रहारः न पाणिपारवनेनां अ-
परेण प्रणीतानां स्फ्येध्मबर्हिषां सादनं ततः स्रुवजुहूपभृतां संमार्गः संमार्जनापासनं पत्नीसंनहनं आज्ये-
द्वासनं पत्न्यात्रवेक्षणं वेद्यामासादनं आज्योत्पवनं प्रोक्षण्युत्पवनं आज्यावेक्षणं जुह्वां तूष्णीमष्टगृहीतग्रह-
णं उपभृति चतुर्गृहीतग्रहणं अथवा जुह्वां चतुर्गृहीतग्रहणं उपभृत्यष्टगृहीतं प्रकृतिवत्तूष्णीमेव ततइ-
ध्मप्रोक्षणम् वेदिप्रोक्षणं बर्हिः प्रतिगृह्य वेद्यां निधानं बर्हिःप्रोक्षणं तत्र स्रुग्भ्यामिति विशेषः मूलावसेकः प्रणीता-
सु पवित्रकरणं बर्हिर्विस्रंसनं आतिथ्य प्रस्तरस्य ग्रहणं ब्रह्मणे समर्पणं एकवृदित्येकधा नुएकवारमित्यर्थः
नेन एकेनैव मंत्रेण पश्चाद्भागे सर्वं स्तृणीयादित्यर्थः ततइध्मात्समिधमादाय प्रस्तरस्य च आहवनीयकल्पनं श्रीराम
नोल्मुकोद्धहनं परिधिपरिधानं स्पृश्यास्पृश्योराधानं आहवनीयेक्षणं आवृत्य विधृत्योस्तरणं प्रस्तरस्य च ७

अभिनिधानं।जुहूपभृतोरासादनं।आज्यस्थाल्याश्च।सर्वालंभः।आत्मालंभनः।उदकालंभः।एहिहोतरित्याम-
न्त्रणं।होतृषदनस्थापनं।सामिधेनीप्रैषः।संतत्वं।निक्षिप्रैषः।इदमहंनवमेनेत्यववाधनं।नवानामिध्मकाष्ठानां
प्रतिप्रणवं प्रक्षेपः।आहवनीयोपवाजनं।पूर्वाघारः।अग्निसंमार्गप्रैषः।अग्निसंमार्गः।आश्राव्यसीद
होतरीम्यवावदेवब्रूयात्।नाग्निर्देवइत्यादि।ततोहोताहोतृषदनमुपविश्यप्रयाजाभावेपिवचनात्स्रुगादा-
पनंभवति।ततोध्वर्युर्जुहूपभृतावादायातिक्रामन्होमार्थंगच्छन्समभयेनुब्रूहीतिहोतारंप्रेष्यति।आश्रा-
व्याग्निंयजेतेति।जुह्वामष्टगृहीतपक्षेऽर्द्धमाज्यस्याग्नेःपूर्वार्द्धेहोमः।इदमग्नयोततसोमायानुब्रूहि।सोमंयज
द्वितीयस्यार्द्धस्यमध्येहोमः।इदंसोमायाततउपभृदाज्यस्यसमानयनंकुर्वन्निडस्तेवेनुब्रूहित्याहविष्णुंयज
पश्चादग्नागेहोमः।उपभृत्यष्टगृहीतपक्षेप्रथमंजुहूस्थंचतुर्गृहीतमग्नयेहुत्वाउपभृतोर्द्धंसमानीय
सोमायहुत्वापुनःसमानयनंकुर्वन्निडस्तेवेऽनुवाचनंकुर्यात्।ततःस्रुचौसादयित्वासोमाप्यायनादिसुब्रह्मण्या
प्रैषांतमातिष्ठ्यावत्।ब्रह्मोद्गातृहोत्रध्वर्युग्नीध्रयजमानाश्च।नाभिकायांहिरण्यंबध्वामदंतीरुपस्पृश्याहवनी-
यंपूर्वेणगत्वासोमस्यालंभनंकुर्वंति।अंशुरंशुष्टइतिाततस्तथैवप्रत्यागत्यप्रस्तरेउत्तानहस्तादक्षि-
णोत्तानावेष्टारायइतिपाणीनिदधाति।ततःपवित्रप्रतिपत्तिः।अग्निसंमार्गहः।व्यूहनं।अग्नेःसोमस्य

८ देव° ४०

विस्मा कज्जितीं अग्निः सोमो विसुक्तय नुइंस्विति । अभ्युक्ष्य परिध्यंजनं । न स्रूक्क वाके प्रेषः । प्रस्तरहोम
भावात् । कर्कमते तु भवति प्रस्तरादानी । अग्रस्य जुह्वा समंजनं । मध्यस्योपभृति । मूलस्याज्यस्थाल्याः
ततः । स्रुवेणाज्यं गृहीत्वा यजमानेन्वारब्धे या ते अग्ने यः शायेति जुहोति । इदमग्नये रघःशायाये तन्वे ॥ इ
दमग्नये इति वा । या ते श्रीण्यपाशेयानीति वचनात् । ततः परिधि विसृत्योरादानं । आग्नीध्रदत्या प ३ ३ प्रेषः
मदंतीति प्रत्याहाभीत्य । ततो मकतामिति नीवेर्हरणं । ततं स्ताभिरेहीति ब्रुवतोऽध्यध्याहरणं । आग्नीधाऽ
आहृतेन मदंत्युदकेन प्रस्तरस्याभ्युक्षणं । ततोग्नीधे निधानार्थं समर्पणं । प्रस्तरस्य । ततश्चतुष्पाद्स्यालां
लंभः । उदकालंभः । संस्रवाहुतिः । उत्तरां सेस्रुच्योर्निधानं । घृताचीइति । वेद्यालंभाभावः । वेदविमो
कपत्नेयोक्त विमोकः । एक वह्न हिहोमः । प्रणीताविमोकः । सुब्रह्मण्याप्रेषः । तदाह्वानं ॥ इत्यु
पसदिष्टिः । अपराह्णे तानूनप्त्रव्रतमध्ये यजमानस्य दुग्धं निनीय यजमानाय व्रतं देयं । ततः प्रव
र्ग्यः शांत्यादिशांत्यंतः । तत्र विशेषः । रात्रिः केतुनेति रोहिण्यो होमः । इदं रात्र्यैः ॥ इदं घर्माये तिऽ श्रीराम
वा ॥ अग्निहोत्रावृता होमे इदमग्नये इति ॥ तत उपसत् ॥ तत्र या तेऽग्नेयः शायेत्युपसदाहुतिः ॥ त ८

8

तोऽनस्तमिते वाग्यमनप्रैषः ॥ अस्तमिते वा विसर्गप्रैषः। व्रतकरणप्रैषः। वाग्विसर्गः ॥ २ ॥ अष्टमाऽ
ध्यायस्य द्वितीयकण्डिका ॥ ॥ त्रिस्तनं व्रतदुग्धे धुक्ष्वेति प्रैषः। एकस्तनमिति वा। प्रथमायामुपसा
दि त्रिस्तनस्तनमेकस्तनं वा। व्रतकरणीं गां दोदुग्धा गार्हपत्ये दीक्षितव्रतस्य श्रपणं। दक्षिणाग्ने
पत्नी राज्ञीयत्नेन रक्षणं। मेहनस्वपने पूर्ववत् ॥ ॥ अपररात्रे व्रतकरणं च पूर्ववत्। प्रातर्विबुधवाच
नं। अनुदिते वाग्बधप्रैषः। वाग्यमनं। उदिते वाग्विसर्गप्रैषः। व्रतकरणप्रैषः। वाग्विसर्गः। द्विस्तन
नं व्रतदुग्धे धुक्ष्वेति प्रैषः। द्विस्तनं दोहयित्वा श्रपणं पूर्ववत्। पूर्वाह्णे प्रवर्ग्यः शांत्यादि शांत्यंतः
तत्राहके तु नेति होमः। इदं स्तनयी येत्यग्निहोत्रावृता होमे त्यागः॥ तत उपसन्न। तत्र रजःशयेत्युपस
दाहुतिः। इदमग्ने रजःशायायेतन्वो। इदमग्नय इति वा त्यागः। ततो वेदिमानं। तत्र शालायाः पूर्वद्वार
मध्यात्त्रीन्प्रक्रमान्द्विपदां प्राच्यां प्रक्रम्य शंकुनिखननं। तस्य शंकोरंतः पात्यसंज्ञेति कीर्तयः।
तस्य शालापांक्कोरंतरालदेशस्यांतः पात्यसंज्ञेति हरिस्वामिनः। ततो ब्रह्मयजमानौ उत्तरवे

८ देवपद्धति दक्षिणतोबर्हिर्वेदिंसंस्पृष्ट्वोपविशतः। एवंअग्नीषोमप्रणयनादर्वाक्त्रैवोपवेशनंब्रह्मणः। अथयदा
४१ यत्रयत्रकर्मकुर्वंतितत्रतत्रगत्वासन्निधौदक्षिणतउपविशतिब्रह्मणःसमंत्रकःआसनसंस्का
रः। ततोयजमानवाच्यंयक्ष्येतिप्रैषः। शाल्लाद्वार्यस्योत्तरतःषट्कासादनं। अग्निहोत्रहवणी। वज्रःप
वित्रच्छेदनानिपवित्रे। अंतर्द्धानतृणं। शम्या। वा। ततःपवित्रच्छेदनं। मदंतूदकमग्निहोत्रहवण्यांकृ
त्वाप्रोक्षणीसंस्कारः। वज्रांतर्द्धानतृणशम्यानांप्रोक्षणं। परद्वायोरवएकःप्रक्रमः। एवंवि
धप्रक्रमपरिमाणंकाष्ठादिगृहीत्वामध्यमशंकोरारभ्यदक्षिणस्यांदिशिपंचदशसुप्रक्रमेषुशंकुंनिख
नति। सावेदेर्दक्षिणश्रोणिः। पुनस्तस्मान्मध्यमशंकोरुत्तरस्यांदिशिपंचदशप्रक्रमान्प्रक्रम्यशं
कुंनिखनति। सावेदेरुत्तराश्रोणिः॥ पुनस्तस्मान्मध्यमशंकोःप्राच्यांषड्त्रिंशत्प्रक्रमान्प्रक्र
म्यशंकुंनिखनतिसःवेदेःपूर्वार्द्धः। यूपावटस्थानंचाततस्तस्माच्छंकोर्दक्षिणस्यांदिशिद्वादशप्रक्रमान्
प्रक्रम्यशंकुःसोवेदेर्दक्षिणोंसः। पुनरपितस्मात्पूर्वार्द्धशंकोरुत्तरतोद्वादशसुप्रक्रमेषुशंकुःस वे श्रीराम
देरुत्तरोंसः। एवंवेदिंमित्वादक्षिणश्रोणेरारभ्यदक्षिणपार्श्वेदक्षिणांसांतंयावत्स्फ्येनरेखांकारयेए १९
वमुत्तराश्रोणेरारभ्योत्तरांसपर्यंतंच। सवतिःसंद्ययापरितनोतिमध्येपृथ्व्याइतिसूत्रांतरे। अत्रवेदि

साधनोपायभूतः श्लोकः ॥ पंचदशमथैकविंशं त्रिकमपरं परस्त्रिकं वापि ॥ द्वादशमुपाशाउत्तसः सोमे रज्जुप्र
माणेमनत्त् इति । ततो वेदिपरिसमूहनं । उत्तरदेशे ष्वालालात्परस्यां दिशि रथांतराले उत्करकरणं । चालाऽ
लाद्वादशसु प्रक्रमेषु प्रत्यगुत्कर इति मानवे परिशिष्टे चात्वालादुत्करं कुर्यात् परेण रथांतरं । उत्करादुत्तरं
कुर्यादूर्ध्वस्य रथांतरं । ऊर्ध्वाश्चात्पूर्वतः कुर्यात्क्वामित्रस्य रथांतरमिति वा । ततोंतःपात्याद्वारभ्या पूर्वार्द्ध
तु शंकुयावत्पृष्ठ्यासंज्ञं वरंडकं कुर्यात् । ततउपरवदेशे उपविश्य मंतृणाव ग्रादानं । सव्येकरणं । दक्षिणेनाल
भ्यजपः । उपरवादेशेन तृणनिधानाद्विसतृणपुरीषप्रक्षेपांतं । ततोंतःपात्ये उपविश्य पूर्वपरिग्रहप्रैषः । पूर्वप
रिग्रहः । यूपावटावधिरघिदक्षिणेनत उत्तरतश्च परिग्रहणं । उपरवदेशात्रिकल्पेरवनं । ततोग्रीधोहरण संमर्श
नं । ततः संमर्शनांते शम्याः स्फ्यं वादाय ध्वैर्यो वेदिकृततरां मात्पर [illegible] दह यपरिमाणेषु त्रिषु प्रक्रमेषु प्रतीच्यां
दिशि चात्वालमानं । तत्र शम्यानिधानात्फ्रन्तर वेदिच्छादनांतं प्रभुवक्र । उदुंबरशाखाभिवोत्तरवेदिच्छ
त्रावसतीति ॥ अत्रापस्तंबः ॥ अपरे यूपावटं संचरमवशिष्य वेद्यामुत्तरवेदिं दशपदां शामेकेरानीति । एवम
न्येष्वपि मंत्रेषु युगमात्रीं यजमानस्य पदप्रमाणेन वा उत्तरवेदिः षडशीत्यंगुलैर्युगं । साच यावत्प्रमाणेत्यादि च
तुरस्र साधनोपायेन साधनीया । ततो परार्हणा दिस्नानं व्रतकरणं । ततः प्रवर्ग्यः शांत्या दिशांत्यंतः । तत्र

रात्रिः केतुनेतिरोहिणहोमः। अग्निहोत्राावृताहोमेग्निर्देवता। ततउपसद्। तत्रजः शायेत्युपसदाहुतिः।
अनस्तमितेवाग्यं धेप्रैषः। वाग्यमनं। अस्तमितेवाग्विसर्गप्रैषः। व्रतकरणप्रैषः। वाग्विसर्जनं। ततोदु
स्तनं व्रतदुग्धे धुक्ष्वेतिप्रैषः। ततोव्रतयोर्यथोक्तेश्रपणं। रात्रौ मेहनस्वपनेपूर्ववत्। अपररात्रेयथोक्तं
व्रतकरणम्। प्रातर्विबुद्धवाचमं। अनुदितेवाग्यं धप्रैषः। वाग्यमनं। उदितेवाग्यं धप्रैषः। वाग्यमनं। व्र
तकरणप्रैषः। वाग्विसर्गप्रैषः। वाग्विसर्जनं। एकस्तनं। त्रिस्तनं वाव्रतदुघे धुक्ष्वेतिप्रैषः। यदिप्रथ
मायांत्रिस्तनं। व्रतदुग्धं तर्हिएकस्तनं। यदिवा तत्रएकस्तनं। तर्हित्रिस्तनं। दुग्धीयथोक्तंश्रपणं। ततः
प्रवर्ग्यः॥ तत्राहः केतुनेतिरोहिणहोमः॥ इदंसूर्यायेनाग्निहोत्रावृताहोमेत्यागः॥ ततऽउपसद्।
तत्रपाते अग्नेहरिशयेत्युपसदाहुतिः॥ इदमग्नयेहरिशयायेतं त्वौ। इदमग्नयेइतिवा॥ ततदृढव्रतप्र
तप्रदानं॥ पत्नीयजमानाभ्यां॥ ततस्तदानीमेवद्वितीयः॥ प्रवर्ग्यः॥ तत्ररात्रिः केतुनेतिरोहिण
होमः॥ अग्निहोत्राावृताहोमेइदमग्नयइतित्यागः॥ ततउपसदिष्टिः॥ तत्रहरिशयेत्युपसदाहुतिः॥ श्रीरामाय ५
ततः प्रवर्ग्यकरणपक्षेउपसत्समाप्तौतेप्रवर्ग्योत्सादनं भवति। ततषाड्शी आध्यायोतेपठितंमादिहल्लिख्यंते। १०
तत्रांतः पात्यसमीपेवेदिमध्ये उपयमन्यादि सर्वपरिघर्म्यं निदधाति॥ ततोशालायांदक्षि